पात्रं हारं सभा मध्ये कोवास्यास्तद नादरः॥५७॥ किंमे श्वर्य मक्षं येन हारवीर पराभवः॥ क्रियते स कृतः प्रायः स पराभव मि-
कृति॥५८॥ अत्रैवोदहरंतीममितिहासं पुरातनं॥ तच्छृणुष्वातियत्नेन भज भाग्य मिदं मुहुः॥५९॥ पुराकश्चिद्भूद्राजा
वरंतप इति श्रुतः॥ रिपवो विजिता स्तेन शूरेणामित तेजसा॥६०॥ हते षु रिपुषु तद्राज्यं आक्रांतं तेन शत्रवः॥ बहु वारं ह-
ताः सर्वे रिपु सैन्यं महीतलं॥६१॥ यावद्रिपु धनं तावत्स मानीय स्वमंदिरं॥ पूर्णं कृतं गजाश्वाद्याः कोटिशस्तस्य भूपतेः॥६२॥
तस्य प्रति भटः कोपि न दृष्टः खलु भूतले॥ सुवर्ण मंदिराण्येव तेन संपादितान्यपि॥६३॥ रत्न प्राकार संवीतं पुरं तेन कृतं पुरा॥
सर्वदा रत्न मालाभिः नगरं तदलं कृतं॥६४॥ तस्मिन्प्रशासति भूपाले सभया एव सज्जनाः॥ अशांभव परिक्रांतं तद्राष्ट्र मघ संकु-
लं॥६५॥ तस्मिन् राष्ट्रे वने कश्चित् ब्राह्मणः शिव तत्परः॥ स कुटुंबः स्थित स्तत्र कृत्वा पर्णकुटीं वटे॥६६॥ तत्र राजा गतो
देवात्सं चरन्विपिनं परं॥ तृषार्तोपि क्षुधार्तोपि हय मारुह्य केवलं॥६७॥ स्थित मन्यत्र तत्सैन्यं स्थितं च परिचारकैः॥ एका-
१० की स्वय मागत्य वट छाया मुपाश्रितः॥ तदानीं तृषितो राजा ययाचे जल मादरात्॥ मुनि कन्यां समालोक्य वट मूल स्थितां
तदा॥६९॥ सादृदौ जल मानीय फलानि विमलान्यपि॥ स तत्पीत्वा जलं श्रांतो जगृहे सफलान्यपि॥७०॥ मूलानि परि
पक्वानि तया दत्तानि कानि चित्॥ तेरा शु पूरयामास स्वोदरं स नराधिपः॥७१॥ तदा तमाह साकन्या तत्कंठे हार

मुत्तमं ॥ दृष्ट्वा प्रहृष्टं राजानं जलमूलादिभिस्तदा ॥ ७२ ॥ ॥ कन्यकोवाच ॥ ॥ गौरीव्रतं ममारब्धं गौरीमूर्तिरियं कृता ॥ पुष्पैरलंकृ-
तावन्यैः पांडुवर्णादिभिस्तथा ॥ ७३ ॥ न धनं मुनिकन्यानां गौरीपूजार्थमुत्तमं ॥ मुक्ताहारस्त्वया देयस्तारता राजन्लोनृप ॥ ७४ ॥ वा-
जिस्कंधेपि तिष्ठंति मुक्ता[illegible] गुच्छाः महस्रशः ॥ तेष्वेकोवा प्रदातव्यो मुक्तागुच्छो मनोहरः ॥ मुक्ताफलालंकृता याः
शिवा याश्च विलोकने ॥ प्रवृत्तं मे मनो राजन् तत्फलं श्रूयते मया ॥ ७६ ॥ मुक्ताहारादिभिर्गौरीयः पूजयति सादरं ॥ स मुक्तो
यानमासाद्य प्रयाति हरमंदिरं ॥ ७७ ॥ रत्नाभरणसंयुक्तामुमां शंकरवल्लभां ॥ दृष्ट्वा राज्यमवाप्नोति भोगेच्छायामिति-
श्रुतं ॥ ७८ ॥ अलंकृतां शिवां दृष्ट्वा गौरीं हारादिभिर्मुदा ॥ विरक्तोपि विमुक्तः स्यात् घोरसंसारबंधनात् ॥ ७९ ॥ हारैर-
भ्यर्चिता गौरी स्वस्वाभीष्टफलप्रदा ॥ सुवर्णाभरणप्रीता निर्वाणमपि दास्यति ॥ ८० ॥ सर्वसौभाग्यसंपन्ना सा गौरी भव
वल्लभा ॥ गृह्णाति भक्तदत्तानि फलं दातुं हि केवलं ॥ ८१ ॥ तस्याः प्रीतिर्[illegible] हारप्रदानेकापि स्या दित्येव याच्या
कृतापि ॥ अयथार्था चेत्स्यात्तदा सार्थकं ते भाग्यं नो चेद्वस्तु किं तेन कृत्यं ॥ ८२ ॥ इतितद्वचनं श्रुत्वा कृत्वा तदवधीरणां ॥ ययौ वाजि
नमारुह्य तदा सर्पः समागतः ॥ ८३ ॥ कोपि कोटरमार्गेण राजकंठमुपागतः ॥ तेन दष्टः स भूपालो मृतः साश्वो महावने ॥ ८४ ॥
ततः परं तु तद्दृष्टं तत्र तत्र लयं गतं ॥ सैन्यं च तन्मृतं सर्वं गजाश्वादिकुलं तथा ॥ ८५ ॥ तस्माद्भाग्यमपि प्राप्य दानपात्रमनुत्तमं ॥

न ददाति धनं यस्तु स विनश्यति सर्वदा ॥८६॥ अत्युत्कृष्टस्य भाग्यस्य फलं खलु तदेव यत् ॥ श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः
सत्पात्रदानमन्यत्तु विफलत्वेन कीर्तितं ॥८७॥ देयं दुर्लभमेवाद्यो दानपात्रं च दुर्लभं ॥ दातृत्वमपि लोकेस्मिन् सुतरामपि दुर्ल-
भं ॥८८॥ धने सति मया देयं धनमित्यपि केचन ॥ प्राप्ते धनेन दानेच्छां कुर्वन्त्यत्यंत लोभतः ॥८९॥ भाग्यवंतः प्रयच्छंति धनं
पात्रे समागते ॥ अभाग्यान प्रयच्छंति तदभाग्यमदानतः ॥९०॥ अदानाद्दरिद्रो भवत्येव हारं परं पात्रमासाद्य मृत्युं प्रया-
ति ॥ पुनस्याद्दरिद्रः पुनर्मृत्युमेती त्यवश्यं दरिद्रो भवत्येव हीनः ॥९१॥ स्वशक्त्या देयमल्पं वासं पाद्यपि स्वशक्तितः ॥
दुर्मुखास्ते भवंत्येव धनदानपराङ्मुखाः ॥९२॥ पुरा कश्चिदभूद्विप्रः कणयाचनतत्परः ॥ स जीवति कुटुंबेन कष्टेः
92/ क्लेशसमर्जितैः ॥९३॥ स कदाचित्स्वदारेभ्यः कणान्दत्वा वनं गतः ॥ काष्ठाद्याहरणं कर्तुं तत्र दृष्टः शिवार्चकः ॥ तदा
वात्यासमानीतः दवभस्मसमावृतः ॥ स काष्ठाहरणोद्युक्तो दृष्टः शैवेन सादरं ॥९५॥ स पृष्टः तेन शैवेन दवभस्म
कणावृतः ॥ शैवोयमिति बुध्येव भस्मभूषितविग्रहः ॥९६॥ ॥ शैव उवाच ॥ ॥ किमेवं खिन्नमधुना मुखं तव म-
हावने ॥ कथमभ्यागतं कृत्यं किं वा वद तवाधुना ॥९७॥ इति तद्वचनं श्रुत्वा संप्रणम्य शिवार्चकं ॥ स्वरूपं ज्ञापयामास
तस्मै तेन स दुःखितः ॥ तमुवाच ततः प्रीत्या कर्तव्यमिदमुच्यते ॥ त्वया यत्नेन दातव्यं शैवायान्नं विशेषतः ॥९८॥ य-

देवयाच्चयालअंतत्र किंचित्प्रयत्नतः ॥ देयं तेन समृद्धिस्ते भविष्यति न संशयः ॥१००॥ नैवान्नपतये दत्तं येनान्नं किंचिदाद-
रात् ॥ स भवत्येव सहसा दरिद्रो नात्र संशयः ॥१॥ अन्नं हारमुखे देयं ग्रासमात्रमपि प्रियं ॥ तेन तुष्टो महादेवः दौर्भाग्यं तेन नश्यति
॥२॥ यदि हारमुखे दातुं न शक्तिः सर्वथा तदा ॥ अन्नं शिवार्पणं कृत्वा भोक्तव्यं नित्यमादरात् ॥३॥ अनर्पितं महेशाय भुंक्ते यो-
न्नं स पापधीः ॥ प्रतिजन्मनि पापिष्ठो दरिद्रो भवति ध्रुवं ॥४॥ अन्नानां पतये नमो नम इति स्मृत्वा प्रदेयं मुदा शर्वायान्न
मनादरं च परतः कृत्वा प्रणम्यादरात् ॥ तेनान्नानि समृद्धिमेत्य सदने तिष्ठंति, यन्निष्ठुरात्तद्देहाद्धि निवृत्य यांति विपिनं यद्गृहात्तद
न्यालयं ॥ इति तद्वचनं श्रुत्वा तमाह द्विजपुंगवं ॥ किमन्नपतिरूपं मे वदेति प्रीतमानसः ॥६॥ ॥ शांभव उवाच ॥ ॥ रुद्रा
ध्यायेन तद्रूपं कथंचित्समुदीरितं ॥ तदेव रूपं विज्ञेयं त्वया गुरुमुखात्खलु ॥७॥ शिवरूपमिति ज्ञानं यद्यप्यस्ति तद्दुर्ल-
भं ॥ तथाप्यभ्यसनेनैव तज्ज्ञानं च भविष्यति ॥८॥ हरो हारमुखे दत्तमाहारमतिमादरं ॥ गृह्णाति दातुमेवादौ स उदारः
सहस्रधा ॥९॥ न तथा ग्राहको लोके दातापि न हरात्परः ॥ न हर्तापि न भर्तापि न कर्तापीति मन्यतां ॥११०॥ सर्वसौभाग्य
दातारं शंकरं लोकशंकरं ॥ गौरीभर्तारमज्ञात्वा दुःखितो मानवो भवेत् ॥११॥ न जानंत्येव गौरीशं मोहपाशसमावृ-
ताः ॥ अत एव महद्दुःखं प्राप्नुवंति पदे पदे ॥१२॥ केचित्तावद्धनोन्मादाद्धि स्मरंति महेश्वरं ॥ विस्मरंति भ्रमा-

त्के चिन्महापातकराशिभिः ॥१३॥ ज्ञात्वा कथंचिदाल स्यात्नाराधयति कश्चन ॥ अधमाधमतां प्राप्य दुःखितः स्यादसंशयं ॥
१४॥ जले बिल्वदले र्वापि पूजितो गिरिजापतिः ॥ ददाति परमां वृद्धिं इति धन्यैः परंमितः ॥१५॥ अतः प्रमादमुत्सृज्य शांगं लिं-
गं समर्चय ॥ निवेद्यान्नानि तत्रैव भुंक्ष्व चिंतय शंकरं ॥१६॥ पापनाशो भवत्येव भवानीवल्लभे स्मृते ॥ ततः परं भाग्यवृ-
द्धिः भवत्येव पदे पदे ॥१७॥ भक्त्या परं महेशस्य भजनं यदि जायते ॥ तदा न भयलेशोपि भवभूतसमुद्भवं ॥१८॥ यस्मा
(स्तानि)
द्भवति भूतेषां भूतान्यपि भवंत्यपि ॥ तं भवं भावनालब्धं भावयाशु भयापहं ॥१९॥ इति तद्वचनं श्रुत्वा नत्वा चैवोपका-
रिणं ॥ ययो स्वमंदिरं विप्रः स्मरंस्तद्वचनान्यपि ॥२०॥ ततः परं लिंगमेकं तेन संपादितं नवं ॥ तत्रार्चनं कृतं तेन बिल्व
पत्रादिसाधनैः ॥२१॥ यदन्नमर्जितं स्वेन तत्सर्वमपि सादरं ॥ निवेद्य शंभवे भुक्त्वा स्थितः स्मृत्वा महेश्वरं ॥२२॥
एवं संवसता तेन रेवातीरे गतं क्वचित् ॥ तत्तीरे लिंगमभ्यर्च्य स्थितो बिल्वदलादिभिः ॥२३॥ तदानीमागतः कश्चि-
त्राजा शिवपरायणः ॥ तेन दृष्टः स विप्रोपि दिव्यभस्मविभूषणः ॥२४॥ ततः परं समागत्य राजा प्राह शिवार्चकं ॥ को-
सि कुत्र स्थितिस्तत्र (तव) क्व वा परिग्रहः ॥२५॥ का वा विद्या समभ्यस्ता कथमभ्यर्च्यते शिवः ॥ कथं (हो) दृष्यो महादेवः तत्स्व-
रूपं च कीदृशं ॥२६॥ किं तज्ज्ञानफलं वास्यात्तदज्ञानफलं च किं ॥ तत्सर्वं वद मे विद्वन् शांभवाग्रेसराधुना ॥२७॥

७२२

शिव रहस्य ह२.तृ.उ.

३०० अ. ४९

दुर्लभः शंभवो लोके शिवज्ञानपरायणः॥ रेवातीरं दुर्लभं च लिंगमत्यंतदुर्लभं॥२८॥ रेवालिंगस्य महिमा तदर्च
नफलं च किं॥ लिंगबोधकदेवो पि तत्पूजाबोधको पि वा॥२९॥ वेराग्यं वा कथं ज्ञातं किं वा तस्य फलं वद॥ इति
पृष्टः स राजानं प्राह विप्रः स चिंतया॥३०॥ ॥विप्र उवाच॥ ॥महेशतत्वं निगमैर्न बुद्धं वेदे मुनींद्रै रपि सि-
द्धसंघैः॥ तज्ज्ञानदेवस्य कथं वदाद्य प्रतारकत्वं च न युक्तमेव॥३१॥ अनंतवेदांतविचारतां ताः शांताः प्रजानंति महेश
तत्वं॥ यथा कथंचित्कणशो महेश प्रसादलेशे सति पुण्यलभ्ये॥३२॥ लिंगतत्वं विदुर्ज्ञेयं लिंगपूजाफलं तथा॥ रेवा
स्वरूपं ज्ञानं च दुर्लभं सुतरामपि॥३३॥ दुर्ज्ञेय एव गिरिजारमणप्रभावः तज्ज्ञानमस्य निगमाविषयं कथं वा॥ दुर्ज्ञेयप
वस्तु विषया न वगाहने पि नास्यापराध इति मे प्रतिभाति राजन्॥३४॥ इत्याकर्ण्य वचस्तस्य तमुवाच स भूपतिः॥
पूजाक्रमं वद मे लिंगस्येति विशेषतः॥३५॥ ॥विप्र उवाच॥ ॥न पूजापि परिज्ञाता न ज्ञातो पि क्रमो मया॥ ब्रह्मादी
नां च तज्ज्ञानं दुर्लभं खलु वस्तुतः॥३६॥ तत्पूजाज्ञानविरहे प्येवं किं चित्फलादिकं॥ देयं लिंगे प्रयत्नेन तावता पातक
क्षयः॥३७॥ त्रिश्राणि बिल्वपत्राणि क्षिप्तानि शिवमस्तके॥ अभक्त्यापि हरंत्येव पातकानि बहून्यपि॥३८॥ अग्नि
र्दाहक एव किं करतलस्पृष्टो न तद्वत्कथं लिंगाराधनमप्यघापहरणे दक्षं विरूपाक्षतां॥ दास्पृष्टे त्येव तदक्षयं फल-

मितिज्ञातं कथं चिन्मया" तद्भिन्नं तु नतत्फलं किमधुना तद्भिन्न साध्ये नवा ॥ ३९ ॥ अस्माभिर्दुरदृष्ट नाशक मितिज्ञातं शिवाराध-
नं" तत्साधन साधितं धन मितिज्ञातं निधित्वेन च ॥ न त्वावत्सुलभं जलेऽपि कृतं संसार दावा नल" व्यवस्थानं कुरुते ह्य-
पार विभवं तत्केन वा ज्ञायते ॥ १४० ॥ रेवातीरे नीर मात्रेण लिंगं तुंगं बिल्वी पल्लवैर्वा फलैर्वा ॥ भक्त्या नित्यं पूजयन्या-
ति मुक्तिं संसाराब्धि व्याधि नाशेन सत्यं ॥ ४१ ॥ रेवातीर प्रापकं पुण्यमेकं नेकं किंतु प्रापकाणां सहस्रैः ॥ धर्मैः प्राप्तं धर्म
हेतु स्वरूपैः धर्मो यातिस्तैः पुनर्जायते नः ॥ ४२ ॥ जानंति केचिद्द्विजासहाय पूजा विधानानि तथापि तानि ॥ न भा-
वनायाः परि पूरकाणि काम्यानि नित्यान्यपि तानि नूनं ॥ ४३ ॥ कस्तत्र भाव परिभावनया महेश ध्यान प्रवृत्त इति
तं वद सावधानं ॥ अंगव्यपाप नियमैर्नियमेन तेन सा भावनापि विकला खलु सत्यमेवं ॥ ४४ ॥ इत्याकर्ण्य वचस्तस्य तत
माहूय स्वकं गृहं ॥ ययौ यानवरस्थेन सह तेन महात्मना ॥ ४५ ॥ तेन तन्मंदिरं दृष्टं मणि मंडल मंडितं ॥ तुंग लिंग समा
क्रांतं हार कोटि समन्वितं ॥ ४६ ॥ तं दृष्ट्वा विस्मयाविष्टः प्रणतः शांकरान्मुनः ॥ पूजयामास लिंगानि नव बिल्व दलादि-
भिः ॥ ४७ ॥ ततः प्रदोष पूजां च स चकार महीपतिः ॥ ततस्तं भोजयामास पक्वान्नैर्हार संयुतं ॥ ४८ ॥ भोजनांते महा
देव कथया प्रीत मानसः ॥ ददौ तस्मै महार्हाणि भूषणानि महीपतिः ॥ ४९ ॥ दुकूलान्यपि दिव्यानि वाहनान्युत्तमान्यपि ॥

309
गोकुलान्यपि दत्तानि धनानि विविधान्यपि ॥१५०॥ तत्सर्वं समुपादाय स तावत्स्व गृहं ययौ ॥ तं दृष्ट्वा विस्मया विप्रा
स्तद्दाराश्च तत्सुता अपि ॥ महदैश्वर्य संपन्नं दृष्ट्वा तद्ग्रामवासिनः ॥ तमूचुरादरान्नत्वा कस्येदं फलमित्यपि ॥ पूर्वेद्युरेवा
गतमस्मदीय गेहे कणार्थं कणभक्षणं च ॥५३॥ कृतं क्षुधार्तेन पिपासना[या]पि पीतं जलं क्षारमलक्षितेन ॥ राज्ञा दत्तं
केन तुभ्यं धनं वा का वा विद्या ते धनाप्तिहेतुः ॥५४॥ मंत्रोपकोऽज्ञायत ते न त्वया तु व्याप्तो गेहो वाजिभिर्गोकुलैश्च ॥
दिव्यैराभरणैर्धनैश्च विविधैर्व्याप्तं कथं मंदिरं ॥ मत्तेभैरमितैर्मदद्रवजलैर्व्याप्तं गृहस्यांगणं ॥ एते हेमरथैरपार
विभवैश्छत्रैश्च मुक्ताफलैर्व्याप्तैः सूर्यनिवारकैर्ध्वजपटैः कोयं प्रभावस्तव ॥५६॥ इति पृष्टः स तैः सर्वैः सोपि
विस्मितमानसान् ॥ प्राह शंकरलीलेयमिति स्मेराननस्तदा ॥५७॥ किं विद्यया किं तपसापि भाग्यं महेश्वरानुग्रह
मंतरेण ॥ अनुग्रहे तस्य भवंति मान्याः सामान्यतो धन्यमता[तमा]श्च सत्यं ॥५८॥ विद्या तु कापि न ह्यास्ति न तपश्च कृतं म-
या ॥ नाराधितोपि गिरिशः सम्यगित्यवधारितं ॥५९॥ छिद्राणि बिल्वपत्राणि जलान्यपि मया परं ॥ लिंगे क्षिप्ता-
न्यभाग्येन विश्वासोपि न मे तदा ॥१६०॥ ज्ञातोपि न महादेवः स सर्वाराध्य इत्यपि ॥ न सर्ववेदवेदांतज्ञेय इत्यपि नार्चितः ॥
१६१॥ आकर्णितापि न महेशकथासुधापि तत्पान पीन हृदयोपि तदा तथापि ॥ दत्तं शिवेन धनमेतदपारमेव वामीभिरप्य
तमपारबलावृताभिः ॥६२

रत्नाभरणमालानां अमलानामनेकधा॥ कांतिराक्षाद्दयत्येव मंदिराण्यमितान्यपि॥ नदान्नानि कृतान्येव नवाग्रादिकान्यपि॥ तथा
पि शंभुर्भगवान् सुप्रीतो बिल्वपल्लवैः॥६४॥ को वा रसः कोमलबिल्वपल्लवैः महेश्वरस्यापि स तन्न विद्मः॥ सतं यथा तेन सम-
र्चितोपि ददाति भाग्यानि ऽमितानि शंभुः॥६५॥ श्रीसोमेश्वरकुंडमध्यविविधापारानुसर्पीं कितायत्नातुंगतरंगसंगतमह
लिंगेषु तुंगेषु यः॥ बिल्वान्यपि अमलानि दास्यति जला भक्तानि भक्त्या मुदा तस्मै दास्यति शंकरः करुणया देवत्वमप्यं ततः
॥६६॥ संतुष्टो गिरिशो ददात्यमितमप्यैश्वर्यमंते स्वकं स्थानं दास्यति शंकरः खलु महादाता स देवोत्तमः॥ तस्मोदेवमिहापि
किं यदि भवेत्तुष्टः स रुष्टोपि वा कष्टं नष्टमिदं जगत्त्रयमिति ज्ञेयं स मृत्युंजयः॥६७॥ इति ग्रामजनैः साकं कृत्वा वार्त्ता महोत्स-
वं॥ ययौ वनं स यत्रासीत् शांभवः स्वोपदेशकः॥६८॥ तदा तन्मार्गगमने कुंभिकुंभस्थलागतैः॥ मदधारागंधवाहैर्व्योममेवहि
तद्वनं॥६९॥ तदा तद्गंधमाघ्राय मृगेंद्राः समुपास्थिताः॥ तत्कुंभिकुंभिदलनं कर्त्तुमेव मदोद्धताः॥७०॥ करियूथं वि-
लोक्याग्रे पश्चात् सिंहवरानपि॥ कालकालं स सस्मार निःशंकोपि स शांकरः॥७१॥ आनीलगिरिसंकाशकरिपोषण
तत्परः॥ सिंहानभिमुखान् दृष्ट्वा प्राह शांकरसत्तमः॥७२॥ इदं बिल्ववनं तावत्पावनं, कालशासकः॥ लिंगरूपं समासाद्य
तिष्ठोत्यवगम्यते॥७३॥ न चात्र गमनं युक्तं वैरेण करिवैरिणां॥ अवैरेण यथाकामं अत्राप्यागमनं मतं॥७४॥ नवबि

 



ल्बवना पार १वनोतीव पावनः॥ यावत्स्मरति स्वैरं तावद्देरे रत्नं खलु ॥ इति तद्वचनं श्रुत्वा स्तब्धाः सिंहाः परस्परं॥ प्रभावं शंभवं स्मृत्वा तदा तस्मिन्महावने॥ ७६॥ ततः परं स विप्रो पि रत्नयानमुपाश्रितः॥ शांभवाश्रममागत्य संतोषं प्राप शांकरः॥ ७७॥ ततस्तं गुरुमालोक्य प्रणम्य च पुनः पुनः॥ कथयामास वृत्तान्तं स्वकं सर्वमशेषतः॥ ७८॥ तदाकर्ण्य स शैवोपि तमाह प्रीतमानसं॥ उत्साहं जनयन्नेव पुनः शंकरपूजने॥ ७९॥ ॥ शैव उवाच॥ ॥ यत्पादुका राधकपादुकाचीप पारमैश्वर्यमपत्नलभ्यं॥ करोति तल्लिंगसमर्चनेन किमेव मैश्वर्यमिति स्मरामि॥ १८०॥ इंद्रोपेंद्र चतुर्मुखादिकसुराराध्यं परार्ध्यं परं यल्लिंगं तद्वै दृक्षितं सकृदपि प्रारब्ध लब्धान्यपि॥ पापानि प्रहरत्य पारसुकृतांभोधिप्रवृद्धिं करोत्यैश्वर्याण्यतुलानि भुक्तिरिति मे तावत्प्रभजायते॥ ८१॥ भूति भूषित सर्वांगो लिंगार्चनपरो भव॥ इतोपि कोटिगुणितं तवैश्वर्यं भविष्यति॥ ८२॥ इंद्रोपेंद्रादयः सर्वे करिष्यंति तदर्चनं॥ पुत्रपौत्रादिवृद्धिश्च भविष्यति शिवार्चनात्॥ ८३॥ मुक्तिर्भविष्यति च पापनाशः संसाररोगव्यसनक्षयेपि॥ अतो विरूपाक्षसमर्चनेन नेयस्त्वया यं समयो भयेन॥ ८४॥ अतः परं जन्मजरादिभीतिं विहाय मृत्युंजयमादरेण॥ भज त्वं भाग्यानि लभस्व भोग्यान्यनुक्षणं श्रीफलवृक्षमूले॥ ८५॥ इत्युक्तः स ययौ नत्वा तं गुरुं शांकरोत्तमं॥ तदा प्रभृति तस्यासीच्छ्रद्धा सः शिवपूजने॥ ८६॥ ततः सकार ग्रामास्सदनाद्यमितान्यपि॥ गजवाजिमहोक्षादिवासयोग्यानि भूरिशः॥ ८७॥

प्रातःकालं समारभ्य शिवलिंगार्चनोद्यतः ॥ वनानि कारयामास शिवपूजार्थमादरात् ॥ ८८ ॥ बिल्वभूरुहमूलेषु शंगलिंगानि को-
टिशः ॥ तुंगानि स्थापयामास स एव शिवपूजकः ॥ ८९ ॥ पंचामृतप्रवाहाद्यैः पूजयामास शंकरं ॥ कुमाराः शंकरास्तस्य जाता
एव सहस्रशः ॥ १९० ॥ तैरर्चितानि लिंगानि कोटिशः कुसुमादिभिः ॥ शिवलिंगार्चनं त्यक्त्वा नान्यत्कुर्वंति तत्सुताः ॥ ९१ ॥ त-
त्प्रभावानुकथनं कर्तुमेव न शक्यते ॥ शिवार्चने न तैर्लब्धः प्रभावस्तादृशः खलु ॥ ९२ ॥ इंद्रलोकादिलोकेषु गत्वा ते
कुसुमान्यपि ॥ समानीय महादेवं पूजयंति प्रयत्नतः ॥ ९३ ॥ तेनंदनवनं गत्वा तत्र मंदारसंभवैः ॥ लिंगानि पूजयामासुः
प्रसवैरमितैरपि ॥ ९४ ॥ प्रसूनमात्ररहितं तद्वनं समभूत्तदा ॥ ततस्तत्पल्लवैश्च कुः शाखाभिरपि पूजितं ॥ ९५ ॥ तदानीमाग
तैर्दूतैरपारैर्वनपालकैः ॥ निवारिताः कुमारास्ते शाखादिछेदनादपि ॥ ९६ ॥ ततस्ताननागतान्हत्वा ते सर्वे वनपालका-
९८ न् ॥ शाखाभिरपि लिंगानि पूजयामासुरादरात् ॥ ९७ ॥ तेषु दूतेषु यः कश्चित्तेहितोपि शनैः शनैः ॥ गत्वा जयंतं वृत्ता
तं वनस्याहातिदुःखितः ॥ ९८ ॥ ततो जयंतः क्रोधेन निर्गतस्तद्वनं प्रति ॥ गत्वा तानाह दुष्टात्मा वचनं क्रोधसाध-
नं ॥ ९९ ॥ तेतद्वचनमाकर्ण्य शिवाराधनतत्पराः ॥ क्रोधानलेन संदग्धं जयंतं चक्रुरद्भुताः ॥ २०० ॥ ततः परं तमाकर्ण्य
जयंतं दग्धमद्भुतः ॥ इंद्रः समाययौ तत्र तानाहातीवदुःखितः ॥ १ ॥ निष्ठुरं वचनं तेन यदुक्तमतिदुःसहं ॥ तदाकर्णनमा-

शिवरहस्य त्रेण तेपि क्रोधसमाकुलाः ॥२॥ ततस्तमिंद्रं ते सर्वे स्वपादतलघातनैः ॥ अस्थिमात्रावशिष्टं च चक्रुः क्रोधानले मुहुः ॥३॥ ह-पू-उ.
इंद्रेपि निहिते तस्मिन्तत्क्रोधः शांतिमापसः ॥ ततः समागताः सर्वे सुराः सूर्योदये तक ॥४॥ ते समागत्य तानाहुः पुरस्कृ- अ. ४९
३०३ त्य गुरुं सुराः ॥ क्षमध्वं च क्षमध्वं च क्षमध्वमिति तत्सुतान् ॥५॥ ततो गुरुरुवाचेदं वचनं शैवपुंगवान् ॥ प्रणम्य विन
येनैव कृतांजलिपुटो मुहुः ॥६॥ शिवाज्ञयाजातमिदं समस्तं यज्ञावितज्ञाविनसंशयोत्र ॥ अतः परं कोत्र शचीपतिः स्या-
त् सिंहासनस्याधिपतिः स एव ॥७॥ इदं वनं शंकरपूजनाय विनिर्मितं नंदननामकं च ॥ इंद्रेण पूर्वं सहतोधुनास्य कः
पालकः स्याच्छिवपूजकोपि ॥ अनामकं चेदृनमेतदद्य शिवार्चनाय प्रसवाः कुतस्स्युः ॥ एतानि लिंगानि नवप्रसूनैः पूज्या
नि सर्वैरमरैः प्रयत्नैः ॥ इति तद्वचनं श्रुत्वा ते सर्वे हृष्टमानसाः ॥ ज्येष्ठं भ्रातरमूचुस्ते कालकोचननामकं ॥ ११ ॥ कालकोचन उवाच ॥
कुमारा ऊचुः ॥ ॥ इंद्रो हतो देव[illegible] गात् इंद्रस्थाने भवान्भव ॥ अन्यथास्य वनस्यापि पालनं न भविष्यति ॥ बा-
लकानां तथा वांछा कस्यचित्खलु जायते ॥ १३ ॥ अयं कनिष्ठ एवेंद्रो भविता भवनामकः ॥ बालकत्वाद्बालकोयं स्याच्छ
चीनायकः खलु ॥ अयं लिंगार्चनं नित्यं सादरं नंदनोद्भवैः ॥ पुष्पैर्लिंगार्चनं कृत्वा स्यास्पत्यत्र न संशयं ॥ १५ ॥ नित्यं
लिंगशतप्रपूजनरतः सोयं युवा नंदने स्थित्वा शक्रपदं मनोहरमिदं सिंहासनं स्वासनं ॥ [illegible] कृत्वा प्राप्य शचीपति

त्वमधुनातिष्ठत्व पारं सुखं प्राप्यांते शिवमंदिरं प्रतिसमायास्यत्युमावल्लभं ॥१६॥ इत्युक्त्वा भ्रातरं ज्येष्ठं तमुमावल्लभाभिधं ॥
पुनः शिवार्चनोद्युक्तस्तत्र दूर्वांकुरादिभिः ॥ ततः सूर्योदये सर्वे तमेव भवनामकं ॥ इंद्रं चक्रुः स एवासीत्स्वेच्छोकांतः शिवा-
र्चकः ॥१८॥ ॥श्रीसदाशिव उवाच॥ ॥ शिवार्चनाद्यैः कुरु शंकरतोषणं ॥ २२० ॥ इत्युक्तोपि महेशेन विप्रवेषेण सादरं ॥
हारं मनोहरं तस्मै न ददौ ॥ शिवार्चनाद्यैः संप्राप्त मैश्वर्यं शिवपूजकैः ॥ तादृशं तत्फलं तावत्ततोप्यधिकमेव हि ॥१९॥
अतः समर्चय प्रीत्या शंकरं शांकरानपि ॥ धीरहारादिदानाद्यैः कुरु शंकरतोषणं ॥ २२० ॥ इत्युक्तोपि महेशेन विप्रवेषे-
ण सादरं ॥ हारं मनोहरं तस्मै नददौ दुर्मतिस्तदा ॥ २१ ॥ ततः स कुपितः शंभुस्तत्कोपेन स्मरागरः ॥ निहितो दुःखितो वि-
प्रसदारः ससुहृद्गणः ॥२२॥ अस्माभ्यमधुना शंभुः प्रसन्नोपि भविष्यति ॥ तुभ्यं रत्नाकरत्वं च दास्यत्यस्त्वदभीप्सितं ॥
१२८ २३॥ ॥ रत्नाकर उवाच ॥ ॥ इतितद्वचनं श्रुत्वा तथास्त्वित्युक्तमादरात् ॥ मह्यं रत्नाकरत्वं च ददौ तत्रार्पितः शिवः
॥२४॥ वृतस्ताभिरहं तत्र जातो भूयान्महोत्सवः ॥ एताः सर्वाः शिवार्चायां निरताः शांकरार्चकाः ॥२५॥ मम दारा म-
नोहाराः शिवभक्त्येकतत्पराः ॥ एतादृशं महद्भाग्यं प्राप्तं शंकरपूजया ॥२६॥ संप्राप्तं महदैश्वर्यं पूर्वैः सर्वैः सुरासुरैः ॥ शि-
वलिंगार्चनेनैव वेदोक्तेन मुनीश्वरैः ॥२७॥ लिंगार्चनेनापि समं न पुण्यं ततोपि नैवाधिकमस्ति पुण्यं ॥ अतस्त्वं देवा-

 



मित पुण्य पुंजाः कुर्वंति नित्यं खलु साव धानं ॥ २८॥ नित्यं शंकर पूजनेन सुधियः कालं न यंत्यादरा॥ दूति व्या वृत फाल भाग
ल लिताः पंचा क्षरात्युत्सवाः ॥ रुद्राक्षा भरणाः क्षणा र्धमपिते माला क्ष पूजां विना॥ तिष्ठंत्येव न सर्वथा शिव कथा पीयूष
पानोद्धृताः॥ २२९॥ इतिश्री शिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे पुण्यकीर्ति रत्नाकर संवादो नाम
एकोन पंचाशो ऽध्यायः ॥ ४९ ॥

(=युवती से किन्नरमाह)

॥श्रीगणेशायनमः॥ धर्मसेनकुमारिकोवाच॥ ॥इत्थंकथानारदेन प्रोक्ता पापविनाशिनी॥ मया श्रुता तया भक्तिः शिव
लिंगार्चनेमम॥ अतः शंकर पूजा मे कर्त्तव्या जन्मनः फलं॥ शिवार्चनं परं मन्ये तदन्यं नाधिकं फलं॥२॥ इति तद्वच-
नं श्रुत्वा स गंधर्वोपि विस्मितः॥ तामेवाह पुनः प्रीत्या शिव पूजन लालसां॥३॥ गंधर्व उवाच॥ ॥तव भर्ता यदि
भवेद्गिरिशाराधन प्रियः॥ तदा तत्सदने वासः तवास्तु कमलानने॥४॥ तस्य प्रीतिर्यथा वत्से महादेवे भविष्यति॥
तथोद्योगो मया कार्यं त्वया कार्यं शिवार्चनं॥५॥ ॥रविरुवाच॥ ॥इत्युक्त्वा सोपि गंधर्वस्तद्भर्त्तु निकटं
ययौ॥ तदा शकट भागस्थं तं ददर्श नृपात्मजं॥६॥ दृष्ट्वा तमाह गंधर्वो राजानमति सुंदरं॥ हारं कर्त्तुं महोदा-
र हारो हार वरार्चकः॥७॥ ॥ गंधर्व उवाच॥ ॥रे रे भूपाल ते बाल निमीलित विलोचन॥ किमुपेक्षि-
827 तमत्रास्ति वद तावन्निशामुखे॥ ॥ राजोवाच॥ ॥बाला मे महिला सापि कालकालार्चन प्रिया॥ श्रीकालका-
लसदनं प्रविष्टा रोष संयुता॥९॥ मम तावन्न गमने शक्तिरस्त्यधुना खलु॥ मत्कृताकृत्य दोषेण प्रतिब-
द्धोस्मि सत्वरं॥१०॥ तया संगः कथं भावि सासौ दैर्यनिधिः खलु॥ तद्देहवातपातेन प्रेतस्य खलु जी-
वनं॥११॥ इति तद्वचनं श्रुत्वा गंधर्वः प्राह तं नृपं॥ मदुक्तं कुरु सा तेन नृप त्वद्वशमेष्यति॥१२॥

शैवीं दीक्षां गृहाणाद्य शिवव्रतरतो भव ॥ शपथं कुरु गौरीशे तथा शंकरपूजने ॥ शिवपूजैव कर्तव्या यावज्जीवं मयेति 
त्यपि ॥ प्रतिज्ञा सा प्रतिज्ञैव तव स्यात्सुखदायिनी ॥ रत्नैरपारैर्विविधैः प्रसूनैरपि कोटिशः ॥ पूजयस्व महादेवं 
305 तेनेष्टं तव सिध्यति ॥१५॥ यदि मध्ये परित्यक्ता शिवपूजा त्वया तदा ॥ हानिस्तावद्भवत्येव धनधा-
न्यादिकस्य ते ॥१६॥ ॥रविरुवाच॥ ॥इति तद्वचनं श्रुत्वा स राजा प्रीतमानसः ॥ चकार ~~शाप~~
शपथं प्रीत्या महादेवपदाम्बुजे ॥१७॥ यावज्जीवं शंकराराधनं मे काले काले कार्यमेवादरेण ॥
दत्तं सर्वं रत्नकोशादिकं च विश्वेशार्चासाधनं तत्समस्तं ॥१८॥ इति प्रतिज्ञां कृत्वैव तमुवाच स भूपतिः ॥
(किन्नरः (=गन्धर्व) उवाच) (शिवरूपा)
शिवदीक्षा कथं प्राप्या मयेति प्रीतमानसः ॥१९॥ तुभ्यं मयैव दातव्या शिवदीक्षेति सादरं ॥ ययौ तेन सरस्तीरं
महालिंगसमन्वितं ॥२०॥ ततः परं स गंधर्वः स्नातं शिवसरोवरे ॥ विभूतिभूषितांगं च नृपमाह ति वि-
स्मितः ॥ शिवसन्निधिमाया हि दीक्षा तत्र भविष्यति ॥ संपादनीया सामग्री ममेत्याह विचक्षणः ॥२२॥
ततो गत्वा कालकालमंदिरं लिंगसंनिधौ ॥ दीक्षां ददौ महाशैवीं सर्वार्थफलसिद्धिदां ॥२३॥ ततस्ते देह
निलयाः पापशैलाः परस्परं ॥ निलयं गतमित्युच्चैः उच्चरंतो गतास्ततः ॥२४॥ धूमाकारान् गिरीन्दृष्ट्वा

पापरूपान्नृपात्मनः ॥ विस्मयं परमं प्राप्य कृतार्थोऽस्मीति सादरं ॥ २४ ॥ ततः सपूतः पुण्यात्मा तदानीं शिवविद्यया ॥
चकार पूजनं शंभोरपोरैः साधनैर्नृपः ॥ २६ ॥ तदा प्रतिज्ञापि कृता नृपेण शंभोः पदांभोरुह पूजनं मे ॥ कर्तव्यमन्य
त्परिहृत्य कार्यमितः किमन्यन्नृपदार्थमिष्टं ॥ २७ ॥ अपारापराधान् क्षमस्वाद्य शंभो मदीयान् मया नैव देयोऽपि दे-
यः ॥ वरोऽयं वरो मे स संसारबंधः प्रतिच्छिन्न एवास्तु तुभ्यं नमो मे ॥ २८ ॥ इति स्तुत्वा महादेवं लिंगरूपेण रतो नृपः ॥
ततस्तमाह गंधर्वो निमीलित विलोचनं ॥ २९ ॥ राजन् प्रदोषकाल सुजातः शंकरपूजनं ॥ जातं च मंदिरं याहि त-
या महिलया सह ॥ ३० ॥ इति तद्वचनं श्रुत्वा गंधर्वं प्राह भूपतिः ॥ शिवलिंगं समालिंग्य कामुकः कामिनी मिव-
॥ ३१ ॥ ॥ राजोवाच ॥ ॥ अतः परं लिंग समर्चनेन नेयं वयो मे, शिव लिंग पूजा ॥ कृतान पूर्वं दुरदृष्टयोगात् के-
ष्टानि मुक्तान्यमिता नितानि ॥ ३२ ॥ संसार वांछापि किलातितुच्छा स्वच्छस्य साकिं भवति प्रबोधो ॥ भ्रमा-
०२० न्धकारो नर विप्रकाशस्ते मं दैरे रप्यतलमेव भोगे ॥ ३३ ॥ रत्ने रपारे विविधैः प्रकामं पुनः पुनः शंकर मं-
दिराणि ॥ कार्याणि यत्नेन शिवार्चनानि बिल्व प्रसूनादिभि रादरेण ॥ ३४ ॥ शिवाधीनं मत्वा सकल
मति पुण्यैः शिवजनः करोति व्यासंगं किमपि खलु हित्वैव सततं ॥ महादेव ध्यानं नव निधि समानानि ब-

शिवरहस्य हृद्या फलानि त्यक्तानि शिव भजन मेवास्य शरणं ॥३५॥ सदनं मदनांतकालयो वसनं भूति रिदं ममाशनं ॥ शिव लिंग सम- हर-तृ-अ
३०६ र्पितं नवं कमलं बिल्व सप ल्लव माला ॥३६॥ इति तद्वचनं श्रुत्वा विमला महिला पिसा ॥ तस्य भूपस्य सस्मेरा स्मि अ-५०
ते रा नंद मापच ॥३७॥ एतावत्तस्य वृत्तांतं धर्म धेनुः शिवार्चक ॥ श्रुत्वा विस्मय मापन्नः स प्राप शिव मंदिरं ॥३८॥
तत स्तं भूति पूतांगं रुद्राक्षा भरणान्वितं ॥ लिंगा लिंगित शांगां गंद्गद श्री शीत मानसः ॥३९॥ तं दृष्ट्वा कन्यकां
दृष्ट्वा गंधर्वं च शिवार्चकं ॥ प्राह गंभीर वचनैश्च तुरः स नराधिपः ॥४०॥ ॥धर्म धेनुरुवाच॥ ॥केनोपदिष्टः शिवलिंग
पूजां कर्त्तुं प्रवृत्तो पि निवृत्त कामः ॥ प्रवृत्त मेतस्य न भावनीव कामो ति मन्य शिव पूजनेन ॥४१॥ ॥धन्योपदेशेन भ-
वंति धन्याः सर्वे पि मान्या श्च शिवार्चनेन ॥ किमेतदाश्चर्य करं करोति स शंकरः सुंदर लीलयापि ॥४२॥
अहो मद्भाग्य मिदं ममापि मत्कन्य कायाश्च विशेषतस्तु ॥ यतो महा देव पदार विंद मानंद कंदं परमा श्रितोयं ॥
*स्वर्ण ४३॥ संसार सागर स्तीर्ण मेते न शंकरः ॥ प्रायः पूर्व भवे प्येवं सोयं शिवपरायणः ॥४४॥ अन्यथा कथ मेतस्य शि-
व भक्ति र्हृदाधुना ॥ कथं वास म भूद्देव मन्या लभ्या विशेषतः ॥४५॥ एवं भक्तिः शंकरे यस्य तस्य भाग्यं
नूनं ताव दुत्कृष्ट मेव ॥ नष्टं कष्टं शंकरा राधनेन पुष्टं स्पष्टं मानसं शांकराणां ॥४६॥ जन्मांतरार्जित महा-

घ लया त्किलायं मृत्युं जयार्चनरतो विरतोपि भोगात्॥ भाग्यं तदेतदनुवासरमेव मत्र संप्रार्थनीय मतिमे मतिरघ्रजाता-
॥४७॥इत्युक्त्वा प्राह गंधर्वं सचित्ररथनामकः॥ त्वदाज्ञया गृहं यातु शीयं महि ल्लयासह॥४८॥ ततः परं गंधर्वं;त-
माह शिव पूजकं॥ मंदिरं सुंदरं प्राप्य स्थातव्यमिति सादरं॥४९॥ भोक्तव्यं शिव नैवेद्यं कर्त्तव्यं च शि(वा)र्चनं॥
(=चित्ररथ)
शिवोपहार ममृतं वृद्धि सिद्धि करं परं॥५०॥ इति तद्वचनं श्रुत्वा चित्राश्व इति भूपतिः॥ तमाह लिंग
मालिंग्य गाढं दृढ मति र्दृढः॥५१॥ ॥चित्राश्व उवाच॥ ॥अमोघाघ संधान लालोल शैल प्रभावाभि भावाय
भावार्चनांबु॥ महेशाभिषेकांबु पीतं, धृतंवा स्व मूर्ध्ना, भवत्येतदेवामृतं मे॥५२॥ शिवाराधनानंद संदोह विघ्ना॥
न कार्यस्त्व या तावदस्मान्नि वृत्तिः॥ तवास्तु प्रशस्तं यदेवास्ति वस्तु स्वतः स्वस्ति ते नैव तन्मे प्रशस्तं॥५३॥दा-
८२ रैषणादि विषपान विमूढ चित्तैः नाराधितं गिरीश पाद पयोजमब्जे॥ ते तावदंधतमसं(स)मवाप्य शोकैः
(=धर्मधेनुः)
लोकेन संति कलि काल भयाब्धि मग्नाः॥५४॥ इति तद्वचनं श्रुत्वा स राजा प्राह तं नृपं॥ अश्वमेधादिकं का-
र्यं तत्कर्त्तव्यं शिवार्पणं॥५५॥ अश्वमेधाः कृताः पूर्वं पूर्वजैस्तव भूपते॥ इंद्रत्व मपि संप्राप्तं भुक्ता भोगा-
ननेकधा॥५६॥ संपादिताः कुमाराश्च शूराः पर पुरंजयाः॥ सर्वात्मना न संसार स्त्याज्योपि खलु भूपते॥५७॥

त्वदीयमपि यद्राज्यं तद्राज्यं रिपुसंकुलं ॥ उपेक्षितं भवत्येव तदुपेक्षापि नोचिता ॥ ५८ ॥ इतिकर्णकठोराणि श्रुत्वा-
वाक्यानि भूपतिः ॥ धर्मधेनुमुवाचेदं वचनं सोपि भूपतिः ॥ ५९ ॥ किमर्थं मे धाव भूर्त्येः वृथैते स्तीर्थाटनैर्वासवेराटवीषु ॥ मुदाजटाजूटतटेंदुखंडं खंडावतंसं भजशैलजासं ॥ ६ ॥ अलं वृथा (व्यर्था) लोपेरत्नमल मलं व्याकुलवलैः ॥
खलेव्योलेवालं प्रबलमहिला लोकनरसैः ॥ असारे संसारे विरतिरधुना साधुजनिता शिवेनातः कृत्यं कि-
मपिनविभाति प्रतिभयात् ॥ ६१ ॥ ॥ रविरुवाच ॥ ॥ एवं संभाषणेनेव गता रात्रिस्ततः परं ॥ प्रातरुत्था-
यच स्नात्वा शिवपूजारतो भवेत् ॥ ६२ ॥ सातस्य महिला दृष्ट्वा तंपतिं शिवपूजकं ॥ स्वयमपि पर्चयामास सह
तेनमहेश्वरं ॥ ६३ ॥ ततस्तमाह महिला चित्राश्चं तस्य कोमलैः ॥ वचनैः सविलासैश्च मंदहासपुरःसरं-
॥ ६४ ॥ सुलोचनोवाच ॥ ॥ राजन्किं वप्रसादेन शिवपूजारतिस्तव ॥ जाता महमिदं भाग्यं इतः किमधि-
कं सुखं ॥ ६५ ॥ परंतु रत्नकोशस्य हेमकोशस्य चाधुना ॥ हेमप्रासादकरणैः व्ययोस्तु शिवपूजया ॥ ६६ ॥
गजवाजिसहस्राणां गोकोटीनां च किं फलं ॥ शांकरेभ्यः प्रदातव्या स्तेन स्यात्पुण्यमक्षयं ॥ ६७ ॥ धान्या-
नां गिरयो गेहे तिष्ठंत्येव नृपोत्तम ॥ तदन्नैः शिवनैवेद्यं कर्त्तव्यमतियत्नतः ॥ ६८ ॥ भोजनीयाः प्रयत्नेन शां-

कराः सर्वदा त्वया ॥ शिवपूजैव कर्तव्या सर्वदा विविधैर्धनैः ॥६९॥ (रविरुवाच) इति तद्वचनं श्रुत्वा गंधर्वेणाभिनंदितः ॥
राजापि स्वगृहं प्राप नृपो महिलया सह ॥७०॥ तत्र लिंगानि तुंगानि नार्मदानि स भूपतिः ॥ स्थापयामास यत्नेन
रत्नागारेषु कोटिशः ॥७१॥ नित्यं शिवार्चनरतः शृण्वन् शिवकथां मुहुः ॥ पुत्रानुत्पादयामास तस्यां शंकरपूजका-
न् ॥७२॥ तं तादृशं नृपं दृष्ट्वा धर्मधेनुर्नृपात्मजं ॥ गंधर्वोऽपि स संतुष्टो ययौ स्वनगरं प्रति ॥७३॥ ॥ भानुरुवाच ॥
इति स्वप्नो महान् दृष्टस्तया चारणभार्यया ॥ ततः समुत्थिता सापि ददर्श शिवकिंकरान् ॥७४॥ ततस्ते तां विलोक्या-
हुः विनयेनैव सुंदरीं ॥ विमानं वरमानीतं तुभ्यं चारणसुंदरि ॥ आयाहि यामः कैलासं दुर्लभं योगिनामपि ॥
शिवप्रसादं लभ्यंते विद्धि बुद्धिविशारदे ॥७६॥ इति तद्वचनं श्रुत्वा स्मृत्वा स्वप्नं महारथं ॥ प्राह स्मेराननामंदं भृं-
०१० गीश्वरमनाकुला ॥७७॥ हीनवत्सलता तावल्लौल्यात्प्रकटीकृता ॥ शंकरेणेति विज्ञातमनाया यामपि ध्रुवं ॥
नार्पितानि महेशाय नव बिल्वदलानि वा ॥ छिद्राणि भक्त्या दत्तं वा नेदं सुरसरिज्जलं ॥७९॥ न चंदनादि-
भिर्भक्त्या लिंगमेतत्समर्चितं ॥ यद्यप्यथाह भगवान् मामद्योद्धर्तुमिच्छति ॥८०॥ न श्रांतो शिवपूजने न वि-
मलो हसो प्रसूनार्चितं ॥ लिंगं नानिमिषेण लोचनयुगेनाद्यापि संवीक्षितं ॥८१॥ न ध्यातं शिवलिंगमेंदु

शकलालंकार पूजालयं॥ व्यर्थं जन्म गतं ममेद मधुना कैलासवासेन किं ॥ ८२॥ न श्रांता रसनापि शंकरपदांभोजस्त- अ. ५०
३०८ वैः मानसं॥ न क्रांतं शिव चिंतने रनुदिनं भूरि प्रमोदैरपि ॥ रम्यं तावदिदं शरीरमपि मे श्रांति न मे पादयोः॥ श्रीकाशी
गमनेन हंत वद मे कैलासवासेन किं ॥ ८३ ॥ कर्णाभ्यां करुणारसार्णव शिवाकांताति कांता मितः॥ स्वांतानंदकरातिशो-
भन कथा पीयूषधारापरा॥ पीता नापि पुरा पुरारि नगरे वीरेश्वराराधने॥ नीतं नैव वयो मया चवद मे कैला-
सवासेन किं ॥ ८४॥ ना भूत्फालतलं त्रिपुंड्ररुचिरं रुद्राक्षमालालयः॥ कायो नाप्यमुमासहाय विलसन्नैव-
द्य पुष्टोऽधुना॥ तुष्टं वा हृदयं शिवांगण महानादैः समाघोषितैः॥ जप्तः शैव षडक्षरोपि न मया कैलासवा-
सेन किं ॥ ८५॥ तीर्थे स्नापि न पूजितो न विलसद्बिल्वैर्दलैः कोमलैः॥ श्रीशैलोपि न वीक्षितः क्षणमुमा
साकं दलाने क्षिता॥ इष्टा नभ्रमरांबिका [illegible]पि कमले नाराधिता सादरं॥ मंदं भाग्यमतः परं तदधु-
ना कैलासवासेन किं ॥ ८६॥ कर्तव्यं गिरिशार्चनं सुरसरिन्नीरैरुधारामरैः॥ बिल्वैः कोमलपल्लवैः स्र-
गमदैः पाटीरसारैरपि ॥ गोक्षीराद्युपहारकारिभिरतः कैलास कैलासवासेन किं ॥ वक्तव्यः
स महेश्वरोपि वचनैरेवं कृपासागरः॥ ८७॥ अश्रैवामितरत्नगोपुरपुरप्राकार धीरस्फुरत्प्रासा-

दामिनमंदिरे रुरुतरे लिंगं गणस्थैरलं ॥ कर्त्तव्यं विमलं महारमपरो मेरुर्यथा सुंदरं तद्वन्मंदिरमत्र चित्रमधुना
कर्त्तव्यमेव ध्रुवं ॥ ८८ ॥ नब्रह्मकल्पोपशमेपि शांगं तुंगं न लिंगं परिहार्यमस्याः ॥ लिंगार्चने मे मतिरस्तु नित्यं कैलास
वासेन मतिर्ममाद्य ॥ ८९ ॥ ॥ ऋषिरुवाच ॥ ॥ इत्युक्तं तद्वचः श्रुत्वा भृंगीशो विस्मयान्वितः ॥ ययौ कैलासनिलयं स्मर-
न् शंकरवैभवं ॥ ९० ॥ गतेषु तेषु सर्वेषु गणेषु विमलाननः ॥ देवेष्वपि महाशैवं सादृशांति विस्मितं ॥ ९१ ॥ तं वि-
लोक्य प्रणम्यापि तमेव शिवपूजकं ॥ कृतांजलिपुटः प्राह चारणेन महादरात् ॥ ९२ ॥ शिवविद्यां प्रयच्छाद्य यद्यस्ति क-
रुणा मयि ॥ अनवद्यानवद्यां मे सिद्धविद्याधरेप्सितां ॥ ९३ ॥ शिवपूजाप्रकारोपि कर्त्तव्यं शिक्षया धुना ॥ अदेयम-
पि ते देयं यदस्ति मम शांभव ॥ ९४ ॥ अतः परं न संसारे रतिरस्याः प्रजायते ॥ शिवार्चनरतिर्जाता शंकरानुग्रहान्मम ॥
९५ ॥ इदं सुरसरित्तीरे लिंगं तुंगं मनोहरं ॥ सोयं बिल्वतरुश्चेति दुर्लभं तदिदं त्रयं ॥ ९६ ॥ तदेतत्कामदं लिं-
गं अकामैरपि पूजितं ॥ ददाति परमैश्वर्यं सुरवंद्यमनामयं ॥ ९७ ॥ दृष्ट्वा विमानमधुना गणकोटिवीतं मां नेतुमागता
उमापतिरक्षितं च ॥ त्यक्तं तदेतदधुना शिवलिंगपूजां कर्त्तुं शिवार्चनरतास्मि न संशयोत्र ॥ ९८ ॥ ॥ ऋषि-
रुवाच ॥ ॥ इत्युक्तं तद्वचः श्रुत्वा ददौ तस्यै स शांभवः ॥ पंचाक्षरं परं शैवमशैवाय च विना शकं ॥ ९९ ॥

शिव रहस्य

स्नातेन रुचिरे तत्र विधुदाभा महोत्सवैः ॥ ततश्चकार सा पूजां शंग लिंगेति निर्मला ॥१००॥ नगरं कल्पितं तत्र रत्नरा- हर. तृ. ७.

जि विराजितं ॥ मंदिरं शंकरस्यापि चित्रं रत्न विजृंभितं ॥ १॥ अपारै रूपचारैः सा पूजयामास शंकरं ॥ श्रुत्वा शि- अ. ५०

३०९

वकथामेव स्मृत्वा च गिरिजापतिं ॥ २॥ ॥ भानुरुवाच ॥ ॥ अतस्त्वमपि यत्नेन कुरु शंकर पूजनं ॥ भज मृत्युंज- (=पद्मावती)

यं नित्यं जप पंचाक्षरं शुभं ॥ ३॥ याव त्सौभाग्य मारोग्यं तावदाशु शिवं भज ॥ शिवार्चनं परं भाग्यं सूते कल्पत-

रुर्यथा ॥ ४॥ आलस्येन विना शिवार्चनरति लिंगेषु तुंगेषु ते जाता चेद्धुना परं नव निधि प्राप्तिः करे संततं ॥

एतत्ताव दिहानुषंगि कमिति ज्ञेयं फलं तत्फलं यत्तत्कुमपार वेद शिखरैर्वक्तुं न शक्यं खलु ॥ ५॥ यावत्ते ध-

नमस्ति तावदधुना सांबाय भक्त्या परं देयं तत्तु सहस्र कोटि गुणितं दास्यत्यवश्यं धनं ॥ तच्चास्मद्वचने

तवापि बहुधा विश्वास एवास्त्वतः पापाब्धि प्रलयो भविष्यति शुभां भो धिश्च संभावितः ॥ ६॥ याज्ञ-

वल्क्य उवाच ॥ ॥ इति भानुवचः श्रुत्वा सापि पद्मावती शुभा ॥ शुभं संभावितं सर्वं भविष्यति भवद्गिरा

॥ ७॥ इत्युक्त्वा सा महोत्साहे कृत्साह जनकं शिवं ॥ पूजयामास रत्नाद्यै रपारै र्नृप भामिनी ॥ ८॥ शिवा

र्चनादन्यमपश्यतो वा यत्नेन कासा च चकार धीरं ॥ परात्परं शंकर मेक मेव मत्वा तदा राधन तत्परा भूत्

को वा नार्चयति प्रभावमतुलं भावं भवाराधकः श्रुत्वा पातककंचुकानि बहुधा भुक्त्वापि मुक्तिप्रदं॥ गोविंदाक्षस-
रोज पूजितपदं मंदारकुंदादिभिर्मोकंदै रतिसुंदरैरपि मुदा मंदैर्मरंदैरपि॥ ११०॥ मनोभव मनोभव
प्रभवभूत भक्तिं यतो न वेद तत एव तद्विपुललीलानलैः॥ विदग्धमपि दग्धमित्यपि वदंति वृंदारकाः॥
शिवार्चगणनाफलैरशिवलक्षणैः दुःखितं॥ १११॥ विवेकविगमे कथं गिरिश तुंगलिंगार्चनं॥ तदक्षय
सुखप्रदं विदितवेदतत्त्वो बुधः॥ जहाति न तदादराः परमुदारहाराः पुरा पुरारिपदपूजनादखिलसिद्धिमा-
पुर्नृप॥१३॥ ॥ नंदिकेश्वर उवाच॥ ॥ इत्युक्तो याज्ञवल्क्येन मुदा जनकभूपतिः॥ प्रणम्य तं मुनिं भक्त्या प्रा
ह देवाः कृतांजलिः॥१४॥ ॥जनक उवाच॥ ॥ त्वदुक्तरीत्या शिवपूजनेषु ममाधिकारः शिवदीक्षितस्य॥ स्या
गान्त
दित्थवेमित्वरया ममाद्य पंचाक्षरं शैवमिह प्रयच्छ॥१५॥ सेयं गंगा तुंगरंगत्तरंगा लिंगं तुंगं शांगमेतेपि बि-
४३ ल्वाः॥ कालः पुण्यः कार्त्तिकः पुष्ययुक्तः मासः सोमः सोमपूजोपयुक्तः॥१६॥ गुरुरपि न ममान्यो मान्यधन्याग्रगण्य
दिश
स्त्वमसि गुरुरपारासारसंसारबंधात्॥ कुरु कुरु कुरु मुक्तं मुक्तिलाभाय शैवं दिश दिश मह्यं मंत्रमप्राप्ततंत्रं
॥१७॥ ॥ नंदिकेश्वर उवाच॥ ॥ इति तद्वचनं श्रुत्वा याज्ञवल्क्यो यथाविधि॥ ददौ पंचाक्षरं तस्मै सकुटुंबाय धी-

मते ॥१८॥ ततस्तया बभौ देवाः शुभया शैव विद्यया ॥ नवेंदुरिव वृंदार वृद्धि हेतुः स भूपतिः ॥१९॥ पंचाक्षर जपं कुर्वन्
कुर्वन् लिंगार्चनं मुहुः ॥ पिबन् शिवकथा रूपां सुधां सुख मवापसः ॥१२०॥ यस्मादेवं द्रिरभया शुभाप नित्यमेवं
महेश्वर पदांबुज मादरेण ॥ उक्ता कथापि मुहुराद रतो नुवारं भक्त्या स्मृतापि सुखदा भवतीति मन्ये ॥२१॥ यः कंटकारि
प्रसवोपि लिंगे निपातितस्तेन गताघसंघः ॥ अयं शिशुः शंकर मंदिरायने यो मयो नैव मयाद्य संघः ॥२२॥ ॥श्री-
व्यासउवाच ॥ ॥ इति तद्वचनं श्रुत्वा पुनरूचुः सुरास्तदा ॥ नंदिकेश्वरमाश्चर्य केरे रेव केरे नताः ॥२३॥ ॥देवा उचुः
॥ अयत्न लभ्यः कथमेव मासीत् केलास वासः सविलास हेतुः ॥ सांबस्य संसार विमोचकस्य तत्वं च दुर्ज्ञेय मिदं शिव
स्य ॥२४॥ जन्माभिल्लकुले तस्य बाल्ये कस्याति कुत्सिते ॥ धर्मवार्ता परिज्ञान शून्यास्ते कुलजाः खलु ॥२५॥ योगिनो
पिन विदुः शिवरूपं संततेन तपसाति क्लेशास्ते ॥ तद्विचार विरतिः कथमासीत् अस्य पुण्य मधिकं कथमेवं ॥२६॥ दृ-
ष्टापूर्वं तेन काशीपुरी वा पी तंत्रालभ्यं ज्ञानवापी जलं वा ॥ लिंगं तुंगं विश्वनाथस्य विल्वे रुत्फुल्लैर्वा पूजितं तेन पुष्पैः ॥
२७॥ नचाविमुक्तेश्वर लिंग पूजा कृता कृतांतांतक तो षहेतुः ॥ नचान्नपूर्णापि विलोकिता सा नचार्चितं तत्पद
पंकजं वा ॥२८॥ नदुंढि राजांघ्रि सरोज पूजा प्रत्यूह नाशाय कृता चतुर्थ्यां ॥ दूर्वांकुरै र्वा घृत लड्डुकैर्वा न पूरिकैर्वा
पिन पुंडरीकैः ॥२९॥

न साक्षाद्विघ्नेश्वरपादपूजा कृता प्रसूनैर्न च बिल्वपत्रैः॥ द्विजैः पवित्रैर्न कृताति भक्त्या वीरेश्वरस्यार्चनमद्य तेन ॥३०॥
विकटाचरणारविंदयोररविंदैर्न च बिल्वपल्लवैः॥ न कृतं खलु पूजनं मुदा न च तेन प्रणतापि सा शिवा॥३१॥ सेना विना-
यकः पुष्पैः चिंतामणि विनायकः॥ मंगलेशो नार्चितोपि यमेशो नार्चितस्तथा॥३२॥ बृहस्पतीश्वरस्यापि विश्वकर्मेश्व
रस्य वा॥ विश्वेश्वरस्य वा पूजा न कृता बिल्वपल्लवैः॥३३॥ चंद्रेश्वरो नार्चित एव तेन सिद्धेश्वरी स्नान समर्चितापि॥
आमर्दकेशो न समर्चितोपि न पापभक्षोपि समर्चितो भूत्॥३४॥ श्रीकालभैरव पदांबुजपूजनं च बिल्वादिभिर्न कृतमेव कदापि
तेन॥ काशीपुरामित शिवालय लिंगपूजा संजात पुण्यफलमप्यमलं श्रुतं न॥३५॥ भवदागमनाज्ज्ञातं रूपमस्य विशेषतः॥
अन्यथा पूज्यता भक्तिः ईदृशेषु कथं भवेत्॥३६॥ महेशार्चक चिन्हानि दृश्यान्यपि लेशतः॥ ज्ञायंते कानि चित्तेषु तानि सं-
१३ त्यवने दृशे॥३७॥ एवं सति कथं वा स्यादधिकारस्य लक्षणं॥ अलमवाधि कारेण जीवने नाप्यलं खलु॥३८॥ योगाभ्यासेना-
पि सर्वज्ञतां न सर्वज्ञत्वं दुर्लभं मादृशेषु॥ ततस्तानाह नंदीशो महेश्वरमनुस्मरन्॥१४०॥ बुध्या ज्ञेयं शांभवं चिन्हमादौ
पश्चात्कृत्यं कार्यमन्यद्बुवद्भिः॥ धर्माधर्मज्ञान सिद्धिः फलं किं विद्यानां वा स्वाश्रितानां विशेषात्॥४१॥ महेश्वरश्चेदधिकार
मन्यं प्रदातुमिच्छत्यति शोभनेच्छः॥ तदा प्रसंगोयमपीति मन्ये महेश्वरस्ता वदति स्वतंत्रः॥ महेश्वराज्ञावशगस्त्वमेव
पे.३ - मैं तस्मादस्मिंस्तावदस्माकमिच्छा यच्छान्यस्मै स्वच्छमच्छाधिकारं॥३९॥ ॥व्यास उवाच॥ ॥इत्युक्त्वा प्रणताः सर्वे मुद्रिकां चि निवेद्यते॥..

संप्रार्थनीयं तदिदं हि भाग्यं ॥ एतत्परित्यागमतिः कुबुध्या मोहादभूदेवमिति प्रबुद्धं ॥ ४३ ॥ ॥ व्यास उवाच ॥ ॥ इत्युक्तास्ते
सुराः सर्वे नंदिकेशेन धीमता ॥ तदाज्ञां शिरसा धृत्वा कृतांजलिपुटा स्थिताः ॥ ४४ ॥ ततः परं तैः प्रणतोपि भक्त्या सनंदिकेशो अ. ५०
३११ पि चतुर्मुखाद्यैः ॥ विमानमारुह्य ययौ गृहीत्वा तं बालकं शंकरमंदिराय ॥ ४५ ॥ गाणपत्यं ददौ तस्मै बालकाय कृपानि-
धिः ॥ तत्त्रिनेत्रे प्राज्यराज्यानि ददौ पूजामनुस्मरन् ॥ ४६ ॥ तस्मात् पारकरुणारससागरस्य विश्वेश्वरस्य महिमा सम-
हान्तो मे ॥ तद्वर्णनाय सहसा न मनः प्रवृत्तं निःशेषतद्गुणविशेषणवर्णनाय ॥ ४७ ॥ चित्तं शंकरसद्गुणार्णवलसत्कल्लोल
मालास्फुरत्कोट्यंशांशविशेषभूरिमहिमासंदोहमानंददं ॥ स्मृत्वा प्यंतकभीतिमात्ररहितं पापाब्धिसंशोषणं
मत्वा तिष्ठति नीलकंठचरणांभोजार्चनात्याकरं ॥ ४८ ॥ भूत्या संवलयन् ललाटमसकृद्रुद्राक्षमालां वहन् तुंगं लिंगमुप
स्पृशन् अभिनवैर्बिल्वीदलैरर्चयन् ॥ वारं वारमुमामनोहरहरापारस्वरूपं स्मरन् कुर्वन् पातकपावकाचललयं
शेवः शिवं वांछति ॥ ४९ ॥ हाराचारपराकराननुस्मरन् श्रीरुद्रमावर्तयन् श्रीपंचाक्षरमक्षरं गुरु जपन् लिंगानि
पश्यन्मुहुः ॥ श्रीविश्वेश्वर पाहि मामिति वदन् गौरीश्वरं संस्तुवन् कुर्वन् पातकपावकाचललयं शेवः शिवं वांछति ॥ ५०
ध्यायन्मारहरं सुमेरुशिखरापारस्फुरन्मंदिराकारस्वांतसरोजकेसरवरासारांकं शंकरं ॥ रोमांचोद्गयमंचयन् प्रस-

रयान्नानंदजाश्रु द्रवं कुर्वन्पातक पावकाचलत्वं शैवः शिवं वांछति ॥५१॥ दुर्दिनानि सुदिनानि नरेणा तीरनीरजनि
रं तर बिल्वैः ॥ बिल्व मूलक मला मल लिंगे शंग मंगलकरां गकरांग्रे; ॥५२॥ इयं शिव कथा सुधा मुहुरु मा मनोहा
रिणी शिवेन कथिता पुरा त्रिपुरवैरिणा सादरं ॥ अपार सुकृतार्णवैः परम वाप भूमंडलं महा घलय कारणं करमा
शुमुक्तेःपरं ॥ रहस्यमेतद्रहसि श्रुतं पुरा पुरारि वक्त्रांबुरुहेण गौर्या ॥ अनेक कल्पावधि सावधान मामेडितं
साधु सुधा रसेन ॥ ततः कदाचिद्गण नायकेन श्रुतं शिवा वक्त्र सरोरुहेण ॥ स्कंदेन तस्मात् श्रुत मादरेण श्रीनंदीके-
शेन ततः श्रुतं च ॥५५॥ ततः सुरैरेतद ति प्रयत्नैः प्राप्तं रहस्यं मुनयो मयेदं ॥ नारायणेनोत्तमति प्रयत्ना दाराधितेनै-
व मुहुर्मयापि ॥ इदं रहस्यं खलु गोपनीयं रत्न स्वरूपं खलु रत्नरत्नं ॥ भक्त्या प्रदेयं खलु शंभोर्ज्ञात्वा स्वरूपं पुनरा
दरेण ॥५७॥ अत्रैवोदाहरंतीममितिहासं बुधोत्तमाः ॥ श्रुणुध्वं सावधानेन सर्वदुःख विनाशकं ॥५९॥ पुरारे वास-
रितीरे शौनकः शिव तत्परः ॥ शिव लिंगार्चनं कुर्वन् उवास कमलादिभिः ॥१६०॥ ~~कुमार~~ ततः परं बिल्वपत्राण्यादातुं वि-
पिनं ययौ ॥ भार्यया सह लिंगं च समादाय स नार्मदं ॥१६१॥ वनजैः कुसुमैरेव पूजयन् गिरिजापतिं ॥ शिवलिंगे
शिवाकारे सर्व सिद्धि प्रदायके ॥६२॥ ततः परं सशुश्राव रहस्यं हरतस्थितः ॥ गीयमानं शुकेनैव कुमारेण ममाग्रतः
१ एतद्यथा कर्ण पथं प्रयाति शैवं रहस्यं परमं पवित्रं ॥ करोति तावत्सकलाघनाशं संसार घोराद्भुत राशिनाशं ॥५८॥

कुमारस्य रहस्येस्मिन् प्रीतिरप्यक्षता सदा ॥ सर्वोपनिषदां सारे परमानंद सागरे ॥ ६४ ॥ ततः श्रुत्वा शौनकोपि रहस्यं
शैवमादरात् ॥ शिष्यानध्यापयामास वेदसारत्व निर्णयात् ॥ ततस्तेष्वेव शिष्येषु केप्यभ्यस्त विशेषतः ॥ गर्गा- अ- ५०
३१२ ख्यः प्रययौ स्वीयं देशं हिमगिरेः परः ॥ ६६ ॥ स्वकलत्रेण संयुक्तः पथ्यभ्यासेन तस्य सः ॥ सूर्य मंडल संकाशः पिशाचैर-
वलोकितः ॥ ६७ ॥ ततस्ते समुपागत्य प्राहुरत्यंतमादरात् ॥ परिवृत्य कलत्रेण सहितं भीति संयुतं ॥ ६८ ॥ ॥
पिशाचा ऊचुः ॥ मनुष्योहितवाकारः सूर्य मंडल संनिभः ॥ कथमासीत्कुतः प्राप्तमिदं परम पावनं ॥ ६९ ॥ भव दर्शनमा-
त्रेण तृषितानां तृषागता ॥ क्षुधापि शांता बहुधा वदा स्म भ्यं विशेषतः ॥ ७० ॥ सत्यं चेदुच्यते तर्हि बहु देयं धनं मुदा
॥ यत्राप्यगणितं द्रव्यमस्माभिरिह पालितं ॥ ७१ ॥ अस्माभिः पापभारेण पिशाचत्वमुपागतं ॥ अस्मत्कृतानां
पापानां रूपतापि न दृश्यते ॥ ७२ ॥ अपार जन्मार्जित पाप संघैरशांकरत्वेन कृतानि भूयः ॥ पापान्यपाराणि पिशाच
योनिः प्राप्ता मुहुर्दुःखविशेष भोगैः ॥ ७३ ॥ पिपासया पिक्षुधयापि नित्यं प्रतिक्षणं नो मरणोपमानि ॥ दिनानि यांत्येव
न तद्विनाशः संभाविता पीत्यति दुःखमेव ॥ ७४ ॥ तव प्रभावोप्यघनाशकोयं तमेव तावद्वद सत्यमत्र ॥ तेनास्मदीयानि
निकिलान्यघानि नाशं प्रयास्यंति न संशयोत्र ॥ ७५ ॥ पिशाचत्व विनाशार्थं त्वत्प्रभावोपयोगिनं ॥ वदान्यथा वचो

पायश्चिंतनीयोन संशयः ॥ ७६ ॥ इति तद्वचनं श्रुत्वा तद्भार्या भयविह्वला ॥ प्राह भर्त्तारमत्यार्त्ता दृष्ट्वा तानुद्यतान्वधे ॥
७७ ॥ रहस्यश्रवणाद्देवतेन मुक्ता भवं त्वतः ॥ तावता तद्वचनं श्रुत्वा धातृप्रीतिर्न भविष्यति सर्वथा ॥ ७८ ॥ इति तद्वचनं श्रुत्वा
सम्यगित्यवधार्य च ॥ रहस्यमादितो वक्तुं चकारोपक्रमं मुनिः ॥ ७९ ॥ तमेव च काचला काराः शृण्वंतः सादरं कथां ॥
पूर्णां हिरण्यरूपत्वमवापुर्मंदमास्तिकाः ॥ १८० ॥ ततस्तानपि दृष्ट्वायं गर्गो विस्मयसंयुतः ॥ मेने शिवरहस्यस्य प्रभावम-
तुलं तदा ॥ ८१ ॥ तन्मुखं प्रमुखांगेभ्यः शनैर्मेचकवर्णता ॥ निर्गता तत्कथालापश्रवणान्मुनिपुंगवाः ॥ ८२ ॥ संतुष्टा
स्ते ततः सर्वे प्रणम्य मुनिपुंगवं ॥ तन्निक्षेपदानेन चक्रुः प्रीतमनुत्तमं ॥ ८३ ॥ ततस्तानाह स मुनिः केन पापेन दुर्दशा ॥
835 प्राप्तेयमिति संप्राहुः स्वकीयाघकुलं तदा ॥ श्रुत्वा तदीयाच कुलानि दृष्ट्वा तदंगकांतिं च मनोत्सवं च ॥ उवास तत्रैव मतो
निधाने रनंतधा प्राप्य सुखानि नित्यं ॥ ८५ ॥ ते संत्यक्त पिशाचदेहनिकराः सर्वेपि गंधर्वतां प्राप्ताः पुण्यगणान्विताः शिव
कथालापानुसंसेवनात् ॥ तस्मात्पुण्यकरप्रसादमसकृच्छ्रोतव्यमत्यादरात् एवं शैवरहस्यमीश्वरपदांभोजार्चकैः केव-
लं ॥ ८६ ॥ एतत्पुस्तकमादरेण लिखितं यः पूजयेत्संततं तत्संतानसमृद्धिरक्षयसुखावाप्तिर्महाघक्षयः ॥ स्यादेवेति शि-
वप्रसादद मिदं शैवं रहस्यं परं श्रोतव्यं शिवपूजनादरसैः मोहश्चैरेरन्वहं ॥ ८७ ॥ कः कर्पूरपरागभासुरगि-

रि स्फार स्फुर च्चंद्रिकां तारा पार सुधाकरा चिर रुचि व्या हार हीरा करान्॥ दूरी कर्त्तुमनंग हर्त्तु रपरः शक्तोऽस्त्य भिख्या-
कुले॥ सोऽहं मोह समूह वाहति मिरा सार प्रकारा करा॥९८॥ पार क्रूर करो रुसूर निकराकाराकरं शंकरं॥ वारंवार
मनु स्मरामि सपरं गौरी विहारादरः॥ संसार ज्वर सागर ज्वर करो ध्येयो दया सागरः॥९९॥ धन्यं भाल तलं विभू-
ति ललितं रुद्राक्ष मालांकितं॥ धन्यं कंठ तलं च नेत्र युगलं धन्यं शिवालोकने॥ धन्यं श्रोत्र युगं च शंकर कथा पीयूष-
धारा वृतं॥ धन्यं मानस मंबिका पति पद ध्याना नुरक्तं सदा॥१००॥ धन्यं मंदिर मिंदु शेखर पदा चारा दरात्यादर व्याहार व्यव
हार धीर रुचिर व्यापार द्वाराकरं॥ हारा पार कुमार वीर सुकरा सार प्रसारा चिरं॥ प्राकार प्रवरं परं पर मिदं किं धन्य मन्य-
द्भवेत्॥१०१॥ श्रीकान्त काल महि लावल्ल काल काल॥ हाला हला मल गला मल जाल भाल॥ कल्लोल लोलकमला
मल पत्रनालं॥ मूल त्रिशूल ममलं कलये नुवेलं॥१०२॥ श्रीगौरी रमण प्रभाव कथना नंदेन मन्मानसं॥ व्याप्तं प्राप्त मतः परं
शिव पदांभोजार्चनानां फलं॥ स्कंदानंद्मेतदेव परमं शैवं रहस्यं मुहुः॥ मोहाग्नि प्रलयांबु वाह इति मे बुद्धिः
प्रवृद्धा मुदे॥१०३॥ ॥श्रीसदाशिव उवाच॥ ॥इति तद्वचनं श्रुत्वा नत्वा व्यासं पुनः पुनः॥ सूताश्रमं
ययुः सर्वे शौनकाद्याः शिवे शुभे॥१०४॥ तत्रस्थं तं पुनर्नत्वा ते सर्वे मुनि पुंगवाः॥ शुश्रुवुर्विविधेस्तो-

त्रेः मद्गात्रं रोमहर्षणं ॥१९५॥ ॥ ऋषय ऊचुः ॥ ॥ व्यासस्त्वया प्रेरितएव सूत श्रीमन्महादेवकथासुधायां ॥ अतो वयं धन्य-
तमाः कृतार्थाः कृताः कृतांतांतकसेवयाच ॥ श्रुत्वात्रैव महेश्वरामितकथा भूयो वसामो वयं सत्संगः खलु शंगवइत्यभिमतः संगो-
य मत्युत्तमः ॥ अस्माकं धनमेतदेव बहुधा तावद्विधेया दया शैवाग्रेसरपादपद्मभजनात् धन्यं परं जीवनं ॥१९७॥ श्री वि-
श्वेश्वरनामकीर्तनसुधासिंधुप्रवृद्धोधुना तत्कल्लोलपरंपरा वितनुते कल्याणराशीं मुहुः ॥ उत्तमोकं समवाप-
तावदधुना पुण्यांबुराशिः परं ब्रह्मानंदरूपव शोभनकुलं दास्यत्ययं सर्वथा ॥१९८॥ इत्याकर्ण्य शिवप्रसादकथनोद्भूतानं-
दजापारा श्रुप्रगलासुधोन्मुख शुकाद्यास्यास्यसंगान्मुनीन् ॥ दृष्ट्वा शंकरपूजनोत्सवरसाविर्भावसंभावनासं-
सारप्रवरावबोधककथासामर्थ्यं महास्तिकः ॥१९९॥ वेदांता अपि तावदंतरहिताः शांताः शिवाराधनध्यानापार-
१६ कथाफलानुकथने स्यादन्यका वा कथा ॥ देवानामुरगेंद्रकिंनरगुरुव्यासादिकानां कथा दूरे धूर्जटिवाग्विशे-
षरचना विज्ञेयमेतत्फलं ॥२००॥ ये वांछंति शिवं शिवामितकथारूपस्फुरत्स्वर्धुनी निर्धूताखिलपातकात्म-
कमला श्रीलासुशीलाः कलौ ॥ ते सर्वे शिवमेव संततमुमाकांतप्रसादात्परं संप्राप्यात्र शिवंकरं शिवमितिज्ञात्वा
शिवं यांत्यपि ॥२०१॥ आज्ञानोरुतरांधकारलहरीपूरारुणः कोप्ययं विज्ञानामृतसागरः शिवकथारूपो विरूपं-
परं ॥

३१४

सर्वं शर्वस्वरूपमेव कुरुते म्लानमुक्तान्महो तद्वृंदः सुरमंदिराकरकरं कर्तुं समर्थः श्रुतः ॥२०२॥ योगाभ्यासरता
भवंतु बहवस्तीर्थाटनाद्युद्यतास्तीर्थावासरताश्च निष्ठुर गिरिद्वारांधकारादराः॥ तत्रास्या मम मास्त्वहं शिवरहस्या पा-
रवर्णस्फुरन्निश्रेणीशिखरेण शंकरकरालंबे शिवं प्रार्थये ॥२०३॥ कंठे तिष्ठति यस्य वा शिवरहस्यानंतचिंतामणिः॥
नित्यं तद्वशतां प्रयांति बिबुधाः कालान्विताः स्वान्विताः॥ तद्गेहां गणमेत्य तिष्ठति रमावाणीशची संयुता तद्भाग्या
वधिमिंदुखंडविलसन्मौलिः परं वेत्यहो ॥४॥ आरुह्याहमहं मुहुः शिवरहस्यानंदरं स्यंदनं ऋग्वेदादिकवेद
चक्रघटितं व्यासादिकाश्वाश्रितं ॥ हारापारवरध्वजं शिवकथाशय्याविताना न्वितं शर्वाधीष्ठितमंतरायरहितं
व्यापारमानंदये ॥ २०५॥ पश्यामः शतशः शिवं करशिवाकांतानिति कांतामितानंतानंदकथासुधाकरकरव्यापार
साराकरं ॥ हारश्रीकरतारकं शिवरहस्यानंदमत्यद्भुतं हा शाचार चिराचिरद्युतिहरव्याहारगंजावृतं ॥६॥ अत्यल्पं फ
लमिंदिरारमणतारूपं विधित्वात्मकं चेल्लोकाधिपतित्वमप्यगमुता ~~कांता~~ कांताचेत्कस्पेत्यतः॥ अन्यं तावदभूत
पूर्वममराप्राप्यं किमप्यंबिकाकांतानंतकथोत्सुकस्य च परं कल्प्यं फलं तद्विधेः॥७॥ श्रुत्वापि प्रपतो द्विजः शिवर-
हस्यार्थी र्धभाग क्षरा पारश्रीकरधीरवोररवमप्याप्नोति कोटिं र्भवेत्॥ ८ ॥ को पीति शपामि शंकरपदांभोजं

भुजा वुन्नतो कृत्वा देवगण स्तुतां शिवकथां मत्वा पिनत्वा शिवो ॥९॥ सत्यं तावदिहोच्यते शिवरहस्यानंद भक्ताकिनी ॥ कल्लोलानिलपोतपूतहृदयां भोजे शुमृत्युंजयः ॥ नृत्यं तत्त्व विकस्या सहामृतरसैः केलास वासेन वा कृत्यं नेति मुहुर्मुहुः शिवरहस्यानंद कंदाधरः ॥१०॥ श्रुत्वेत प्रमथाधिनायक कथापूतास्ततः स्तत्कथा मध्यस्थाक्षर रूपमप्य घगिरि प्रध्वंस वज्रायुधं ॥ यत्पादांबुधि वाडवो पचकुला पारांधकारा मितानं भ्राको मितरा शिकुंडलमिदं किं वा सुधासागरः ॥ ॥२१०॥ कस्तूरी स्वल्प खिल्यामिव सुकृतवरकरा पार रत्नाकरोरुः श्री युक्तानंत मुक्ताफलमिव विमलं शैवमेतद्रहस्यं ॥ धृत्वा भावो पि भाति प्रभुरिव जगतां शंभु भक्त प्रभावो भावो भाग्यांबुराशिः शिव पद कमला राधकः कोपि लोके ॥११॥ किं तस्याव भृथाप्लवैः सुर सरिद्रेवादि तीर्थाप्लवैः किं गोकोटि तुलादि दान निकरैः किं दिव्य तीर्थाटनैः ॥ भक्तिश्चेद्गिरिशार्चने शिवरहस्यानंद सिंधु स्फुरत्धीरा पारतरंग मंगल कथा भागार्धभागो पि वा ॥१२॥ संसाराद्भुत सागरं शिवरहस्योत्कृष्ट नौकाश्रितः श्री विश्वेश्वर कर्णधार कृपया तीर्त्वा घनक्लेशं भयं ॥ त्यक्त्वा तत्पर पार रूप परमानंद स्वरूपां विकां तानंद दपादपद्म पुलिनासीनो न नी सम्यहो ॥१३॥ पायादन्वहमेव वः शिवरहस्यां भोरुहं कंदति स्कंदो नालति तन्मनः शिवपदांभोजः प्रभावो सति ॥ पत्रं तीरा गुणाः शिवांघ्रि कमलं तत्कर्णिका रूपति श्रांतं मे भ्रमरत्पु

मापतिकथातत्केसरं तिस्वतः॥ २१४॥ पायादंक गतांबिकांक विलसत्पर्यंक लीला लता॥ पारानंद द सिंधु राननसुधा दाना
करः शंकरः॥ स्कंदालोकन सागरो गिरिसुता स्मेरा धर स्वादना॥ नंदालोलित विग्रहो मुहु रुमा दिव्यांग संग प्रियः॥१५॥
पायाद्व्यय भव भूरि वि भवो भूमृत्कुमारीकरा॥ पार श्रीकरतार हार रुचिरालंकार शंकाकरः॥ किं गौरीकरजा चिराति
रुचिराश्री पद्मरागा धरा॥ धार श्रीरिय मित्यु माप रिवृढो गाढं शिवा लिंगितः॥ पायादर्धेंदु मौलिः श्रुतिकथितकथाकल्पवृ-
क्षोतिदक्षो॥ दिक्षु व्याप्तः क्षणं वा भव भव भवजा पारता पापहारं॥ स्मृत्यारूढो पियो वित्परिवृढ गिरिजा रक्षितो वेदशाखो॥
नंदीशादि प्रसूनो मुनिजनमधुपो मोक्षलक्ष्मी फलाढ्यः॥१७॥ पायादर्धांगि गौरीकर कमल कथारत्न सिंधु र्य-
तो॥ भूत्त्वज्ञाना मृतांशुः शिव भजन सुधा शैव कल्पद्रुमोपि॥ शंगश्री लिंगपूजा व्रत नियम मणि र्भक्ति भूकामधेनुः
वैराग्ये रावृतोपि त्रिनयन चरण ध्यान रूपा पि लक्ष्मीः॥१८॥ पायादर्धशशांक शेखर कथा श्रीकामधेनुर्यया॥ लिं-
गाराधन पुण्य लक्षण भ भूत्क्षीरं तदप्यक्षरं॥ आमीक्षापि विलक्षणा शिव यशो रूपा शिवा धिक्यता॥ धीरूपं दधि
शंकरांघ्रि कमल स्नेहात्मकं तद्घृतं॥१९॥ कल्याणानंद निम्न गाब्धि सिकता नीरांश भूभृद्दृणां॥ पारां शांश घनांश भाग
गणना काले न काले नवा॥ ब्रह्माद्यैरपि सादरैः शिव रहस्योक्ताक्षराधीक्षर॥ व्याक्ता कर्णन पुण्य शैल गणनाकर्तुं न-
शक्या द्विजाः
॥२२०॥

स्वस्त्यस्तु प्रियमस्तु शं शिवरहस्याकर्णने संततं विश्वासोस्तु शिवार्चने शिवजने भूतित्रिपुंड्रे शिवे॥ रुद्राक्षाभरणे शिवार्चनरताः पुत्राः पवित्रास्तथा पौत्राद्या अपि संतु शोभनकुलान्याकल्पमायुश्च वः॥२२१॥ भो भो भवाद्भुतदवानलजालमालासंतापभीः शिवरहस्यकथातिवृष्ट्या॥ शांताः प्रशांतहृदयाः सदया भवंतः स्वात्मन्युमारमणपादरजो भजध्वं॥२२२॥ संसारोरुवसंतसूरकिरणव्यापारतापातुरा पारं श्रांतिविना शिवं शिवरहस्याभृत पूर्वप्रपां॥ कोवा नेच्छति वां छितं यदि भवे दिष्टं परं जीवनं त्यक्त्वा स्वात्मविघातकं कलिमलाक्रांतं कलौ केवलं॥२२३॥ ॥स्कंद उवाच॥ ॥इत्युच्चैर्गिरिशार्चनोत्सवरतान् कर्त्तुं प्रवृत्तास्सदा सूतो भूतिविभूषितः शितलसद्भाल त्रिपुंड्रांकितः॥ सायंकालशिवार्चनोद्यतमतिः स्तेरोस्त शृंगं यथा वुत्तुंगोन्नतशंभलिंगममलं दृष्ट्वेव दूरान्मुने॥२२४॥ सायंकालशिवार्चनोत्सवरतान् दृष्ट्वा मुनीन्नतमुतांस्तद्द्वारान्तरवः शुका अपि पिकाः काला मराला अपि॥ शार्दूलातरुवोपि गोकुलयुताश्चक्रुः शिवाराधने यत्नं भूतिविभूषिताः शिवमहादेवेत्युदीर्योच्चकैः॥२२५॥ एवं शंकरशंकरामृतकथापीयूषधारामृताः सर्वेतिमन्यः प्रदोषसमयं संवीक्ष्य फालेक्षणं लिंगे पूजयितुं त्रयीमपि छहुः स्मृत्वा प्रवृत्तास्ततः॥ अजं स्तनुमासहायकलने कालोयमित्यूचिरे॥२२६॥ इत्याकर्ण्य वचो विलोक्य रविमप्युल्ललिता भूतिभिः बिल्वैरीशि-

व प्रजनोत्सवरताः सिद्धेश्वरं वीक्ष्य च ॥ धृत्वा मौन मुमासहाय शिव इत्युक्त्वा शिवाराधनं चक्रुस्ते क्रतु कोटि पुण्य फलदं
३१६ लिंगार्चनं कुंभज ॥२२७॥ श्री कालभैरव षडाननढुंढितुंडि नंदीश भृंगि वृषभेश्वर वीरभद्रैः ॥ ब्रह्मादिभि-
श्च कनकांचित वेत्रहस्तैः आराधितोस्तु पुरतः स शिवः शिवोनः ॥२२८॥ आचंद्रार्क मिदं रहस्य मनिशं शैवं शिवा
र्थेमदः श्रोतव्यं ~~श्रुति~~ सुख संतति प्रद मुमाकांतं प्रियं सादरं ॥ एतत्पुस्तक दान मप्यघहरं पुण्यांबुराशि प्रदं सर्वाभीष्ट
द मप्यतः शिवरतैः श्राव्यं श्रुतिव्याप्रृतं ॥२२९॥ ॥ इति श्री शिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे श्री याज्ञवल्क्य जनक
संवादो नाम पंचाशोध्यायः ॥५०॥ ॥ श्री काशी विश्वेश्वरार्पणमस्तु ॥ ॥ श्री शिवाय नमः ॥ ~~श्री वीरेश्वरायनमः~~ ॥
श्री वीरेश्वरायनमः ॥ श्री अंनपूर्णा गंगा विश्वेश्वरेभ्यो नमः ॥ श्री सिद्धेश्वरायनमः ॥ हरायनमः ॥ मृडायनमः ॥ शंभवे
नमः ॥ तृतीयांश पूर्वार्ध अध्याय ॥ ५०॥ उत्तरार्ध अध्याय ५०॥

इतिश्रीशिवरहस्यतृतीयांशः समाप्तः

